# जटापटलकारिका

शैशिरीये समाम्नाये व्याडिनैव महर्षिणा
जटाद्या विकृतीरष्टौ वक्ष्यन्ते नातिविस्तरम् १
जटा माला शिखा रेखा ध्वजो दण्डो रथो घनः
अष्टौ विकृतयः प्रोक्ताः क्रमपूर्वा मनीषिभिः २
ब्रूयात्क्रमविपर्यासक्रममीदृग्विधां दिशेत्
जटाख्यां विकृतिं धीमान् विज्ञाय क्रमलक्षणम् ३
अनुलोमविलोमाभ्यां त्रिवारं हि पठेत्क्रमम्
विलोमे पदवत्संधिरनुलोमे यथाक्रमम् ४
षत्वं णत्वं च दीर्घत्वं क्रमसंधौ यदुच्यते
व्युत्क्रमे तन्न कर्तव्यं स्वरक्षैप्रादिकं भवेत् ५
विलोमे पदवत्संधिरनानुपूर्व्यसंहिते
आनुपूर्व्ये क्रमे त्याज्यं व्युत्क्रमं पदवत्पठेत् ६
चतुःक्रमे त्रिक्रमे च तथा पञ्चक्रमेऽपि च
आद्यन्ताभ्यां त्रिवृन्मध्यं ब्रूयात्क्रमविपर्ययैः ७
समयादौ क्रमे यद्वत्समयात्परतस्तथा
जटायां समयादिस्थं शुद्धेन परिवर्तयेत् ८
समयक्रमणं नास्ति समयादिक्रमं विना
त्रिक्रमं समयादिस्थमादिना सह तं पठेत् ९
व्युत्क्रमे क्रमवत्संधिः स च क्षैप्रादिरिष्यते
डकारादिविधानं तत्स्वरान्तःपरिवर्तनम् १०
त्र्यक्षरान्तप्रगृह्याणामुकारामन्त्रितस्य च
विलोमे पदसंधौ तु प्रगृह्यत्वं न विद्यते ११
एकारौकारपरस्त्वकारोऽभिनिहन्यते
व्युत्क्रमे क्रमवच्चैव नवधा कम्पलोपनम् १२
विलोमसंधौ प्रश्लिष्टे क्षैप्राभिनिहितेषु च
वर्जयित्वा स्वरं जात्यं त्रिषु कम्पनिषेधनम् १३

परिग्रहावग्रहेषु द्व्युदात्तादिपदेषु च
उदात्तादिविधानं तच्छौनकोक्तं भवेदिह १४
आदित्यैर्यातमित्यस्मिन्पादे चाष्टाक्षरे भवेत्
पदाध्यायेऽनुदात्तः स्यात्संहितायामुदात्तवत् १५
पदद्वयमनुक्रम्य व्युत्क्रम्योत्म्यक्र संधिवत्
स्वरलक्षणसंयुक्ता सा जटेत्यभिधीयते ते १६
इति जटापटलकारिका

Reference:
K.V. Abhyankar and G.V. Devasthali, *Vedavikṛtilakṣaṇa-saṁgraha, A collection of twelve tracts on Vedavikṛtis and allied topics,* Bhandarkar Oriental Research Institute: Poona 1978.